समक्षमिति । अक्ष्णो योग्यम् ।

नदी ॥ इह स्वरूपस्यैव ग्रहणं न सञ्ज्ञायाः पौर्णमास्याग्रहायण्योः पृथग्ग्रहणात् । उपनदीति । टजभावे नपुंसकह्रस्वः । इदं त्ववधेयम् । 'नदीभिश्च' इति सूत्रे विशेषाणामिव स्वरूपस्य ग्रहणं, विशेषाणामेवेत्यत्र मानाभावादित्युक्तम् । तेन पञ्चनदमिति सिद्ध्यति । अत्र च नित्योऽच् । तदुक्तम्—

गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि ॥ इति ।

एतच्च 'अच्प्रत्यन्वव' इत्यत्राजिति योगविभागात्सिद्धम् । पूजार्थमिति । अन्यतरस्याङ्ग्रहणस्य प्रकृतत्वादिति भावः ॥

इत्यव्ययीभावः ॥

---

सिद्धिरिति वाच्यम् । 'अन्त' इति सूत्रे समासस्यान्तोदात्तत्वमुत्तरपदस्य वेति विकल्पे आद्ये इदंप्रथमका इत्यादौ कपोऽन्तोदात्तत्वापत्तिमुक्त्वा अस्तु तर्ह्युत्तरपदस्येत्युक्त्वा तत्पक्षे ऽनृच इत्यत्रान्तोदात्तत्वासिद्धि(१)रितीत्यर्थपरभाष्यविरोधेन तत्पक्षस्याङ्गीकर्तुमशक्यत्वादित्यलम् । इन्द्रियप्रत्यक्षपर इति । बाह्येन्द्रियेत्यर्थः । सर्वबाह्येन्द्रियाविषये परोक्षत्वव्यवहारादिति भावः ।

न सञ्ज्ञाया इति । तत्सञ्ज्ञकस्येत्यर्थः । नपुंसकह्रस्व इति । उपलक्षणमेतत् उपसर्जनह्रस्वस्यापि । तदुक्तमिति । माधवादिभिरिति भावः । 'नदीभिश्च' इत्यत्र कैयटोऽप्येवम् । परन्तु योगविभागसिद्धस्य सामान्यत्वेन विशेषण 'नदीपौर्णमासी' त्यनेन बाधः कथं नेत्यत्र दृढं मानं फलं च चिन्त्यं तदेतत्तदुक्तमित्यनेन ध्वनितम् ॥

इत्यव्ययीभावः ॥



---

(१) इत्यत्रान्तोदात्तत्वासिद्धिरिति । इत्युक्त्वा उभयोरपि प्रकरणेन लक्ष्यानुसारात्क्वचिदुत्तरपदान्तस्य क्वचित्समासान्तस्योदात्तत्वम् इति भाष्ये समाहितमिति बोध्यम् ।

इत्यव्ययीभावः ।

